UPNUL/2013/51445
अभिनिर्देशित एवं सन्दर्भित

ISSN 2277-5854
UGC CARE LISTED

# श्रीविद्यामन्त्रमहायोग

## (आगमतन्त्र की शोधपत्रिका)

**(षाण्मासिकी)**

संस्थापक सम्पादक
**श्री दत्तात्रेयानन्दनाथ जी**
(सीताराम कविराज)

सम्पादक
**प्रो. राजेन्द्र प्रसाद शर्मा**
वरिष्ठ शोध अध्येता,
(भारतीय दार्शनिक अनुसन्धान परिषद्)
पूर्व-समन्वयक, उच्च अध्ययन केन्द्र व
पूर्व-अध्यक्ष, दर्शनशास्त्र विभाग,
राजस्थान विश्वविद्यालय, जयपुर



**श्रीविद्यासाधनापीठ**

**वाराणसी (उ.प्र.)**

वर्ष 12 अङ्क 2

श्रीविद्या साधना पीठ शिवसदन गणेश बाग, नगवा, वाराणसी के लिये प्रकाशानन्दनाथ द्वारा श्रीविद्या साधना पीठ, शिवसदन, गणेश बाग, नगवा, वाराणसी से प्रकाशित एवं स्टार लाईन भवन संख्या बी 13/90 सोनारपुरा, वाराणसी से मुद्रित।

फरवरी, **2023**

सम्पादक :
**प्रो. राजेन्द्रप्रसाद शर्मा**

प्राप्तिस्थान
प्रकाशन विभाग
**श्रीविद्यासाधनापीठ**
शिवसदन, गणेशबाग, नगवाँ, वाराणसी
दूरभाष : 0542-2366622

UPNUL/2013/51445
ISSN. 2277-5854
UGC Approved Journal (No. 40949)
UGC CARE-listed

सङ्गणकटङ्कित :
**विशाल कम्प्यूटर्स, जयपुर**

मुद्रक :
**स्टार लाईन**
सोनारपुरा, वाराणसी।

मूल्य : 125/-



**नोट :** इस अंक में प्रकाशित समस्त लेखों के सम्बन्ध में सभी विवाद वाराणसी न्यायालय के अधीन होंगे।

UPNUL/2013/51445 Peer Reviewed & referred ISSN 2277-5854
Peer Reviewed & referred UGC CARE LISTED

# ŚRĪVIDYĀ MANTRAMAHĀYOGA

## Āgamic-Tāntric Research Journal

**(Bi-annual)**

Founder-Editor
**Sri Dattātreyānandanāth**
(Sitaram Kaviraj)

Editor
**Prof. Rajendra Prasad Sharma**
Sinior Fellow
(Indian Council of Philosophical Research)
Ex-Co-ordinator (UGC CAS)
Ex-Head, Department of Philosophy,
University of Rajasthan, Jaipur.




**ŚRĪVIDYĀ SĀDHANĀ PĪTHA**
**Varanasi (U.P.)**

वर्ष 12 अङ्क 2

# विषय–सूची

# आगमेषु प्रतिमाविज्ञानं मूर्तिकला च

**प्रो. शीतलाप्रसादपाण्डेयः**

आगमेषु भगवदाराधनार्थं कुम्भे, मण्डले, अग्नौ तथा मन्दिरे प्रतिष्ठापितविग्रहाः चत्वारि मान्यस्थानानि सन्ति। एतेषु त्रयो विषयाः मूर्तेराराधनागमशास्त्राणां विद्यते। वैखानससम्प्रदायानुसारं भगवदाराधनस्य कृते त्रयो मार्गाः प्रतिपादिताः सन्ति—1. मानसीपूजा, 2. होमपूजा, 3. प्रतिमापूजा च। हृदि निरन्तरं जगदीशस्य ध्यानार्चनं मानसपूजा। मानसपूजायाः अपरनाम अन्तर्यागो विद्यते। अग्निमण्डले शुभप्रभायाः जनार्दनस्य ध्यानं कृत्वा हविषः प्रदानमेव होमपूजा विद्यते। विष्णुप्रतिमां देवागारे संस्थाप्य भक्तिपूर्वकं नित्याराधनमेव बेरपूजनं कथितं विद्यते। विष्णुप्रतिमां देवागारे संस्थाप्य भक्तिपूर्वकं नित्याराधनमेव बेरपूजनं कथितं विद्यते। अस्यापरनामबहिर्यागोऽपि विद्यते। एतेषु त्रिष्वपि बेरपूजनस्य विधिर्वर्तते। प्रीतेर्भक्तिर्भवति, भक्तेर्हरिः सुलभो विद्यते।[1] भगवदाराधनस्य रूपद्वयं (साकारः निराकारश्च) विद्यते।[2] अग्न्याधानन्तु आहताग्निपुरुषविशेषस्य मृत्योरन्तरम् समाप्तो भवति, परन्तु बेरार्चनप्रक्रियया समाराधनम् अनन्तं कालं यावत् प्रचलति। पूजेयं भक्तिपूर्वकं करणीयम्। भगवदाराधनायाः कृते मूर्तिपूजनं सर्वोत्तमं विद्यते। प्रतिमानिर्माणं प्रत्यक्षरूपेण शिल्पशास्त्रीयविषयो विद्यते। शिल्पादेव प्रतिमायाः प्रादुर्भावो भवति। उक्तञ्च—

**विज्ञानं शिल्पकौशल्यम्। जगत् सर्वं शिल्पमेव भवति।**
**शिल्पात् प्रतिमा जायन्ते।**[3]

प्रतिमायाः बिम्बं, कौतुकः, बेरः, समानार्थाः, शब्दाः सन्ति। कौतुकस्थानेके पर्यायाः सन्ति। अर्चा च कौतुकं प्राणो बेर एकार्थवाचकाः। स्पष्टो वर्तते यत् अर्चा, कौतुकः, प्राणः, बेरः, च एकस्यैवार्था प्रदायकाः सन्ति। अर्च्यत्वाज्जल- पुष्पाद्यैः कीर्तिताऽर्चेति सूरिभिः। सर्वेषां प्राणभूतत्वात् प्राण इत्युच्यते बुधैः। श्रीभूदेव्योर्वरत्वाच्च वर इत्यपि कीर्तितः।

**2. प्रतिमाभेदः**—विविधाराधनानुसारं प्रतिमायाः विविधभेदाः प्रतिपादिताः सन्ति। देवालये चलप्रतिमायाः अचलप्रतिमायाश्च समाराधनं निर्दिष्टं विद्यते। चलस्य नाम जङ्गमा अचलस्य स्थावरा विद्यते। एकतः अपरं स्थानं नीयते चेत् तस्य नाम जङ्गमो बिम्बो वर्तते। अचलबिम्बो ध्रुवबेरेण निर्दिष्टो विद्यते। प्रतिमायाः समुपयुक्तविभाजनं पाञ्चरात्रागमस्य शिल्पशास्त्रस्यापि मान्यता वर्तते। बहुबेरार्चनक्रमे वैखानसागमानुसारम् एकस्याधिकस्य बेरविधानं दृश्यते। यथा—1. ध्रुवबेरः, 2. कौतुकबेरः, 3. बलिबेरः,

4. उत्सवबेर:, 5. स्नपनबेरश्च। ध्रुवबेरस्य तात्पर्योऽयं विद्यते। कौतुकबेरस्योपयोगनित्याराधनाय क्रियते। अस्यापि चलाचलरूपेण भेदद्वयं प्रतिपादितम्। अस्य स्थापनं कौतुकबेरस्य उत्तरभागे दक्षिणभागे च भवति। अस्य निर्माणं दारुणा शिलया च न भवति। बले: इत्यस्य तात्पर्योऽयं विद्यते यत् पशुहिंसनं न अपितु अन्ननिर्मितमेव विद्यते। उत्सवबेरस्य बोध: प्रतिमाविशेषेण विद्यते, यस्योपयोगो नित्यनैमित्तिक-उत्सवेषु क्रियते। अस्य शान्तिक-नैमित्तिक-उत्सवाङ्ग-नित्यार्चनायाम् समुपयोग: क्रियते।[4] प्रतिमानिर्माणदृष्टौ ध्रुवबेरस्य स्वरूपत्रयं विद्यते-1. चित्रम्, 2. चित्रार्धम्, 3. चित्राभासश्च। सर्वेषां पृथक्-पृथक् लक्षणानि निर्दिष्टानि। मनोन्मानप्रमाणयुक्त एव चित्रबेरो विद्यते। यस्याङ्गानि अर्धरूपेण दृष्टिगोचराणि भवन्ति, तस्य नाम अर्धचित्रबेरो विद्यते। पट-कुड्यादि: चित्राभासस्य अपरनामास्ति। भेदोऽयं पाञ्चरात्रागमस्यापि समभीष्टो विद्यते। क्रमश:— उत्तम:, मध्यम:, अधमश्च वर्तन्ते।[5] चलाचलरूपेण चित्राभासस्य भेदद्वयं विद्यते। पटादौ लिखितं चित्रं चलं तथा भित्तादौ लिखितं चित्रम् अचलञ्च विद्यते। चित्रबेरस्य फलं ऐहिकम् आमुष्मिकञ्च विद्यते। चित्राभासस्य समर्चनं ऐहिकफलदात्रं विद्यते। समूर्तार्चनाधिकरणे चित्राभासबेरस्य समर्थनस्य निषिद्धं कृतं विद्यते।[6]

अवस्थितेः आधारानुसारं ध्रुवबेरस्य भेदत्रयं विद्यते।

1. स्थानक:, 2. आसीन:, 3. शयान: च। पाञ्चरात्रागमे एतदतिरिक्त: समुल्लेखो विद्यते। अर्चनाधिकारे स्थानकं सात्विकरूपेण, आसीनं राजसरूपेण, शयानं तामसरूपेण प्रतिपादितम्। अविनाशनं मोक्षार्थिभि: शयानं बिम्बस्य समर्चनं निर्देशो विद्यते। ध्रुवबेरवत् कौतुकबिम्बस्य परिकल्पनं विद्यते। किन्तु शयानकौतुक-बिम्बस्य निषेधो विद्यते। ध्रुवबेरस्य चत्वारो भेदा: सन्ति—1. योग:, 2. भोग:, 3. वीर:, 4. विरहश्च। योगकामिने योगबेर:, भोगार्थिने भोगबेर:, वीर्यार्थिने वीरबेर:, विरहार्थिने विरहबेर: च एतेषां समर्थनं विधानं विद्यते।[7] विमानार्चनकल्पे विरहस्थाने आभिचारिकबेरस्य कल्पना कृता विद्यते। अर्चनाधिकारे मोक्षार्थिने विरहबेरस्य निर्देशो विद्यते। शास्त्रेषु अभिचारिकस्य विरहबेरस्य वा वर्णनं न विद्यते। स्थानकं, आसीनं, शयानं एते त्रयो बेरस्य विद्यते। ज्ञानकाण्डे बेरस्य चत्वारो भेदा: प्रदर्शिता:। स्थापन-स्थान परिवारदेवतानां न्यूनाधिक्यं स्वीकृत्य प्रतिमानां भेदा: वर्णिता:।[8] योगस्थानध्रुवबेरस्य उत्तममध्यमा-धमभेदेन भेदत्रयं वर्णितम्। ध्रुवबेरस्य भुजाद्वयं भुजाचतुश्च प्रतिपादितम्। विरहबेरस्य सायुधेन निरायुधेन उभयभेदो विद्यते। विरहस्थानकस्वरूपं द्विभुज-धूम्राम्बरयुक्त-श्यामवर्ण-शुक्लाङ्ग-ऊर्ध्वदृष्टि-तमोगुणसम्पन्न-विमलनयन-ब्रह्मादिपरिवारेण च रहितं भवति। भोगासनं ध्रुवबेरस्य उत्तम-मध्यम-अधमेन भेदत्रयं विद्यते। वीरासनं ध्रुवबेरस्य श्रेष्ठ-मध्यम-अधमरूपेण सप्रमाणं भेदत्रयं प्रतिपादितम्। मूर्तिनिर्माणविषये पाञ्चरात्रागमग्रन्थै: सप्रमाणं अङ्गै: उपाङ्गैश्च सह प्रतिपादितं (निर्देशितश्च) विद्यते।[9] इदं विवेचनम् अतीव सूक्ष्मं विद्यते। ध्रुवबेरस्य अवयवसंख्या 473 प्रतिपादितम्।[10] मत्स्यकूर्मवराहवामनादि-अवताराणां प्रतिमानां निर्माणं कौतुकबेरान्तर्गतो विद्यते। तथा तद् चतुर्भुजरूपेण स्वीकृतम्।[11]

भगवतः पार्षदानां भृगोः मार्कण्डेयस्य, ब्रह्मणः, शङ्करस्य, श्रीदेव्याः, भूदेव्याः प्रतिमास्वरूपं वर्णितं विद्यते। ध्रुवबेरस्थानके विद्यमाने सति परिवारबेरोऽपि समुपतिष्ठति। विष्वक्सेनः, विघ्नेशः, रोहिणी माता, ज्येष्ठा, सरस्वती च परिवारबेरस्य आसीनरूपेण स्वीकृतम्।[13]

**मत्स्यमूर्तिः**—मत्स्यमूर्त्तिप्रतिष्ठाविषये वर्णनं कृतं वर्तते यत्—वैराग्यस्य, ऐश्वर्यस्य, अभ्युदयस्य प्रतिष्ठायाः समुल्लेखनं भवति। तदनन्तरं मत्स्यस्य कूर्मस्य समर्थनं कर्तव्यम्।

**कूर्ममूर्तिः**—कूर्ममूर्तेः रूपद्वयं विद्यते—

**स्वस्थानाच्चलितजगदण्डरक्षणार्थं प्रथमः।**
**अमृतमथने मन्दाचलभरणार्थं द्वितीयः।।**[14]

कूर्मध्रुवबेराय फेलाकारविमानस्य विशेषरूपेण विधानमस्ति।[15]

**वराहमूर्तिः**—''राजराष्ट्रविवृद्धये वराहम्'' ''राज्यस्य वर्द्धनार्थं वराहमूर्तिः स्थापनीया।"[16] वराहस्य स्थापनाहेतो विमानविशेषसर्वतोभद्रः, अङ्गनाकारः, सोमच्छन्दसाञ्च समुल्लेखो विद्यते।[17] प्रकीर्णाधिकारे पर्वताकारं श्रीप्रतिष्ठितं विमानं विहितमस्ति।[18] वैखानसे वराहस्य रूपत्रयं—1. आदिवराहः, 2. प्रलयवराहः, 3. यज्ञवराहश्च विहितम्।[19]

**नृसिंहमूर्तिः**—नृसिंहमूर्तिरूपं वैखानसागमग्रन्थेषु विद्यते।[20] क्रियाधिकारे नृसिंहस्य पञ्च रूपाणि सन्ति। प्रकीर्णाधिकारे—1. स्थितः, 2. आसीनः, 3. सुदर्शननृसिंहः, 4. लक्ष्मीनृसिंहः, 5. पातालनृसिंहः, 6. पुच्छनृसिंहश्च वर्तन्ते।[21] क्रियाधिकारे लिखितमस्ति यत् ''**नारसिंहविकल्पाश्च बहुधा परिकीर्तिताः।**''[22]

सपरिवारगिरिजनरसिंह-बेरलक्षणम्, सपरिवारलक्ष्मीनृसिंहध्रुवबेरस्वरूपम्, सपरिवारपातालनृसिंह-ध्रुवबेरस्वरूपम्, पुच्छनृसिंहध्रुवबेरलक्षणम्, यानकनृसिंहध्रुवबेरस्वरूपं पृथक्-पृथक् वर्णितं विद्यते।[23] नृसिंहस्य कर्मार्चादि बेरस्वरूपं प्रतिपादितं विद्यते।[24]

**वामनमूर्तिः**—विमानार्चनकल्पस्य पञ्चम-अवतारमूर्तिमानस्य प्रतिमाकल्पन- पञ्चतालमानेन क्रियते। द्विबाहुः, छत्रदण्डधारी, कौपीनशिखाधारी, मेखला- सुशोभितयुक्तो, यज्ञोपवीतधारी, कृष्णाजिनधारी च स्वरूपं विद्यते।[25] प्रकीर्णाधिकारे वटुरूपधारी, दण्डकमण्डलु, भुजाद्वयसम्पन्नः, बालरूपयुक्तो वामनो विद्यते।[26] काश्यपज्ञानकाण्डे वामनस्य दक्षिणहस्ते दण्डः, वामहस्ते छत्रञ्च वर्तते इति वर्णितम्।[27]

**त्रिविक्रमः**—वामनस्यैव प्रादुर्भावरूपं त्रिविक्रमो विद्यते इति कथनमसत्यं न विद्यते। पुराणानुसारं भगवान् श्रीवामनो बलिं याचते पादत्रयं वसुधाम्। परन्तु तस्य मापनाय शरीरं विशालं कृतम्। तेनैव विशालपादेन पृथिवी, स्वर्गः, तस्य कायश्च मापिताः। वैखानसागमानुसारं त्रिविक्रमो भगवतो विष्णोरवतारेषु अन्यतमो विद्यते। पादन्यासभेदेन त्रिविक्रमप्रतिमाया रूपत्रयं स्वीकृतम्-त्रिविक्रमास्त्रिधा प्रोक्तो लोकेषु

त्रिपादन्यासात्। भूलोकाक्रमणार्थं जानुमात्रम्, अन्तरिक्षलोकाक्रमणार्थं नाभिमात्रम्, स्वर्गलोकक्रमणार्थं ललाटमात्रं च ऊर्ध्वपादो भवेत्।[28]

**परशुरामः**—परशुरामः ध्रुवबेरस्य प्रतिष्ठायाः धर्मवृद्धये तथा सुखाकांक्षायै च वर्तते।[29] देवालयः समुद्रनदीसरोवरस्य तटे भवेत्।[30] परशुरामः रक्तवर्णेन, द्विभुजेन, जटामुकुटभूषितेन, नीलाम्बरधरेण, वीरासनेन शोभितो विद्यते। दक्षिणहस्ते परशुर्वर्तते।[31]

**रामः**—रामस्य प्रतिमाद्वयं वर्णितं—सायुधः निरायुधश्च।[32] द्विबाहुयुक्तः, श्यामवर्णः, धनुर्धारी, त्रिभङ्गी, च स्वरूपं वर्णितं विद्यते। मुकुटादिभूषितं, पीताम्बरधारितं, हस्ते धनुर्धारितं विद्यते। वामभागे लक्ष्मणो दक्षिणभागे जननी माता सीता च वर्तते। हेमवर्णा, पद्मनेत्रा, शुकपिच्छनिभाम्बरा, सीता तथा धनुर्धारीरूपं लक्ष्मणो विद्यते। हनुमान् अञ्जनवर्णः रक्तमुखः, श्वेतवस्त्रधारी च विद्यते।[33]

**बलरामः**—बलरामावतारस्योद्देश्यं भूमौ दैत्यवधार्थं विद्यते।[34] यस्य सार्वभौम- साम्राज्यस्य कामना विद्यते, तेन बलराममूर्तेः संस्थापनं कर्तव्यम्।[35] बलरामस्य विग्रहो निम्नवत् विद्यते—

**वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च।**
**सव्यं चाभयहस्तं तु वाममूरुनिवेशितम्।।**
**रेवतीं दक्षिणे पार्श्वे नीलोत्पलदलप्रभाम्।**
**पद्मं दक्षिणहस्तेन गृहीत्वाऽन्यं तथैव च।।**
**ऊरौ निवेश्य चासीनां रेवतीं च प्रकल्पयेत्।**
**सर्वाभरणसंयुक्तं देवं देवीसमन्वितम्।।**[36]

**कृष्णमूर्तिः**—विष्णोः प्रसिद्धोऽवतारो विद्यते कृष्णमूर्तिः। कृष्णस्तु भगवान् स्वयम् इति *श्रीमद्भागवते* वर्णितं विद्यते।[37] भगवान् श्रीकृष्णः पीताम्बरधारी विद्यते। हस्ते वेणुरपि विद्यते। पूर्णेन्दुचन्द्रसदृशो मुखं विद्यते। गोपालगोपवेषधारी वंशहस्त-अष्टतालसमायुक्तो भवेत्। वासाधिकारे सपरिवारकृष्णध्रुवबेरो निम्नैर्विद्यते—

**कृष्णस्य ध्रुवबेरं तु देव्याश्च सहितं क्रमात्।**
**उक्तं ध्रुवस्य मानेन कुर्यात् कृष्णं विधानतः।।**
**लीलायष्टिधरं देवं वामे नासाङ्ककर्पूरम्।**
**सर्वाभूषणसंयुक्तं ब्रह्मसूत्रसमन्वितम्।।**
**रक्ताम्बरधरं चैव श्यामलं कमलेक्षणम्।**

**कल्किमूर्तिः**—विष्णोः अन्तिमावतारः कल्किरूपं विद्यते। कल्किविग्रहप्रतिष्ठायोद्देश्यः ''पापौघविघ्नाय कल्किणं पूजयेदिति विज्ञायते—ज्ञानकाण्डे निर्दिष्टो विद्यते।[38] कल्किध्रुवबेरस्य स्थापना पर्वताकृतिः गोपुरोऽथवा कूटागारदेवालये विधानमस्ति।[39] चतुर्भुजकल्किमूर्तिः नराकृतौ कल्पितो विद्यते।[40]

उत्सवस्नपनबिम्बो विष्णुसदृशो स्वीकृतो विद्यते।[41] पाञ्चरात्रसंहितायामपि कल्किमूर्तेः कल्पना नैकेषु रूपेषु कल्पिता सन्ति।[42]

**चतुर्विंशति-अवताराः**—दशावतारानन्तरं वैखानसागमग्रन्थैः केशवादिचतुर्विंश ध्रुवबेरस्य कल्पनायाः निर्देशनं प्रदर्शितम्। केशवादिमूर्तीनां देवालयो विष्णुविमानसदृशाः भवन्ति।[43]

एतावता संक्षेपेण आगमेषु प्रतिमाविज्ञानस्य मूर्तिकलायाश्च वर्णनं संप्राप्यते।

**संदर्भाः**


1. *क्रियाधिकार*: 1/12-14
2. *समूर्तार्चनाधिकरणम्* 1/28, 27/1, ज्ञानकाण्डम् अध्याय 1, यज्ञाधिकार: 1/10
3. *आगमसुषमा*, पृ0 266
4. *क्रियाधिकार*: 14, खिलाधिकार: 8/15
5. *समूर्तार्चनाधिकरणम्* 18/13-14
6. तत्रैव 18/14
7. *क्रियाधिकार*: 5/75
8. *यज्ञाधिकार*: 15/37-38
9. क. *विमानार्चनकल्पः*, पटल: 22-23, ख. *जयाख्यसंहिता* 20/9-66, ग. *भार्गवतन्त्रम्* 4/9-94, घ. *सात्वतसंहिता* 24/91-180. ङ. *विश्वामित्रसंहिता* 22/61-67
10. प्रदेशसंग्रहाद ज्ञेय: चतु:शतं त्रिसप्तति:। व्याख्यातमानुपूर्व्येण विज्ञेयं शास्त्रकोविदै:। - *खिलाधिकार*: 14/249
11. क. *प्रकीर्णाधिकार*: 16/118-191, ख. *समूर्त्तार्चनाधिकरणम्* 24/30
12. *क्रियाधिकार*: 5, *विमानार्चनकल्पः*, पटल: 20, *खिलाधिकार*: 15
13. *ज्ञानकाण्डम्* 37/79
14. क. *ज्ञानकाण्डम्* 79, ख. *क्रियाधिकार*: 11/9-10
15. *वासाधिकार*: 18
16. *ज्ञानकाण्डम्* 37
17. *ज्ञानकाण्डम्* 37
18. *प्रकीर्णाधिकार*: 13/26
19. क. *विमानार्चनकल्पः*, पटल:, 56, ख. *समूर्त्तार्चनाधिकरणम्* 58
20. *विमानार्चनकल्पः*, पटल: 56
21. क. *क्रियाधिकार*: 11/27-29, ख. *प्रकीर्णाधिकार*: 13/51-52
22. *क्रियाधिकार*: 11/58

23. *विमानार्चनकल्पः*, पटलः 57
24. *अर्चनाधिकारः* 13
25. *विमानार्चनकल्पः*, पटलः 57
26. *प्रकीर्णाधिकारः*. 17/19-20
27. *ज्ञानकाण्डम्* 82
28. *विमानार्चनकल्पः*, पटलः, 37
29. *ज्ञानकाण्डम्* 37
30. *वासाधिकारः* 21
31. क. *ज्ञानकाण्डम्* 83, ख. *समूर्त्तार्चनाधिकरणम्* 60/5-7
32. *ज्ञानकाण्डम्* 83
33. *खिलाधिकारः*; 19/88-133
34. क. *ज्ञानकाण्डम्* 84, ख. *वासाधिकारः* 22
35. *ज्ञानकाण्डम्* 37
36. क. *क्रियाधिकारः* 11/102-105, ख. *समूर्त्तार्चनाधिकरणम्* 60/54-56
37. *श्रीमद्भागवत*
38. *ज्ञानकाण्डम्* 37
39. *प्रकीर्णाधिकारः* 16/103
40. क. *विमानार्चनकल्पः*, पटलः 59, ख. *प्रकीर्णाधिकारः* 16/104-106
41. *क्रियाधिकारः* 6/22
42. क. *मार्कण्डेयसंहिता* 8/67-70, ख. *नारदीयसंहिता* 13/303-305, ग. *पाद्मसंहिता, क्रियापाद* 18/45-46
43. *प्रकीर्णाधिकारः* 17/37

धर्मागमविभागः,
संस्कृत विद्या-धर्मविज्ञानसंकाय
काशीहिन्दूविश्वविद्यालयः,
वाराणसी-221005
चलवाण-9452823899

# श्रीमद्भगवद्गीतायां योगप्रसङ्गः

## डॉ. शान्तिगोपाल-दासः

विश्वस्य प्राचीनतमे *ऋग्वेदाख्ये* ग्रन्थे आपातदृष्ट्या बहुदेवतावादो निरूपितोऽपि प्रकृतप्रस्तावेनैकस्यैव देवतावादस्य सुनिश्चितैका प्रवणता समान्तरालरूपेण संलक्ष्यते। ऋग्वेदस्य मन्त्रेषु बहुदेवतासु एकस्या एव शाश्वतसत्ताया अस्तित्वं स्पष्टतयैव समुल्लिखितमास्ते। तथा ह्याम्नातम् - ऋग्वेदस्य प्रथममण्डलस्यैकस्मिन् मन्त्रे -'**एकं सद् विप्रा बहुधा वदन्त्यग्निं यं मातरिश्वानमाहुः**'[1] इति। एकामेव शाश्वतीं सत्ताम् ऋषयः अग्नि-यम-मातरिश्वादिभिर्नामभिराख्यातवन्तः। दशममण्डलस्यैकस्मिन्नेव मन्त्रे सममेव भावो दृक्पथम् आयाति - 'एकं सन्तं बहुधा कल्पयन्ति'[2] इति। अर्थाद् ऋषयश्चिन्तयामासुः एकामेव सत्तां बहुविचित्रितत्वेन। पुनः ऋग्वेदस्याष्टममण्डले समाम्नातम् - एकं वा इदं वि बभूव सर्वम्। अर्थात् सैकैव सत्ता समस्तरूपाणि धारयति। निरुक्तकृता यास्काचार्य्येणोक्तम् - देवताया एक आत्मा बहुधा स्तूयते इति। अर्थात् देवतानामेक एवात्मा। स चात्मा बहुरूपेण प्रकीर्तितः[3]। वस्तुतः साखण्डात्मिकी सत्ता वेदान्ते उपनिषत्सु च विविधदेवतानां माहात्म्यख्यापनेन परमात्मरूपेणोपवर्णिता। दशममण्डलगते पञ्चविंशत्युत्तरैकशतसंख्यके देवीसूक्ते परमात्मस्वरूपिण्यो वाचो माहात्म्यं संसूचितम् —अहं रुद्रेभिर्वसुभिश्चराम्यहम् इति। अस्मिन् मन्त्रे मुख्यतः एकस्यैव परमसत्ताया नाम ब्रह्मणः उपलब्धिः प्रतिध्वन्यते। ब्रह्म परमात्मा वेति कृत्स्नस्य जगतो नियन्ता। ईशोपनिषदः आद्ये मन्त्रे आम्नायते — **ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्** इति। अर्थात् विश्वब्रह्माण्डस्य सर्वे विषयाः परमात्मनाच्छादिताः। निरुपाधिक-सोपाधिकभेदाद्ब्रह्मणो भावद्वयं मतम्। निरुपाधिकत्वेन ब्रह्म खलु सत्यं ज्ञानमानन्दस्वरूपकञ्चेति। परमात्मा खलु निश्चलो गतिहीनश्च। अपरतः सोपाधिकतया स वेगवान्। सर्वव्यापकत्वात् स दूरवर्त्यपि निकटवर्तीति। तथा हि समाम्नातम् -

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः।।**[4]

स च परमात्मा विशुद्धोऽपापविद्धो ज्योतिर्मयश्चैतन्यस्वरूपश्च। स खलु क्रान्तदर्शी स्वयम्भूः। सर्वज्ञः सर्वकर्तव्यनियन्ता, सर्वेषां कर्मफलदाता चेति। आत्मस्वरूपे यथार्थतया समुपलब्धे सति आत्मविषयकमज्ञानं विदूरितं भवति। अज्ञाननाशे जीव-ब्रह्मणोरैक्यं संसूच्यते। एकमेकवाद्वितीयम् खलु आत्मचैतन्यं नाम ब्रह्मेति। आनन्दमय्याः सत्ताया अस्या उपलब्धौ जीवो दुःखमयाज्जीवनचक्राच्चिरमुक्तिं परिलभ्यानयानन्दमयसत्तया समं तादात्म्यतामनुभवति। तथा हि तैत्तिरीयोपनिषद्याम्नातम् - 'आनन्दो ब्रह्मेति आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रवन्त्यभिसंविशन्तीति'।[5] मुमुक्षोर्ब्रह्मतत्त्वानुसन्धित्सोर्वेति

यथार्थपन्थाः कस्तावत्? कं पन्थानमाश्रित्य स साधकः स्वलक्ष्यं प्राप्नुयात्? शास्त्रकृतां नये – स पन्थाः खलु योगः। मनसि प्रश्नो जायते – योगेनैव यदि ब्रह्मसायुज्यावाप्तिर्भवति तर्हि एतैर्ज्ञानैर्ग्रन्थैर्वा किं नाम प्रयोजनम्।

ननु कथमत्र योगस्वरूपविषयिणी विप्रतिपत्तिर्युज्यते, शास्त्रे योगादिस्वरूपस्य निर्णीतपूर्वत्वात् इति चेन्न। तथापि शास्त्रवचनेष्वेव बहुत्र योगस्वरूपं बहुधा प्रपञ्चितमिति तत एव उदेति विप्रतिपत्तिः। तथा हि **अथ योगानुशासनम्** (1/1) इत्यत्र योगपदम् भावव्युत्पत्त्या समाध्यर्थकम्, **योगश्चित्तवृत्तिनिरोधः** (1/2) इत्यत्र चित्तवृत्तिनिरोधपरम्, **तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः** (2/1) इत्यत्र तादृशनिरोधसाधनपरम्, स च योगः यमादिभेदवशादष्टाङ्ग इति कैश्चिदपि यमादिरपि योगभेदत्वेन योग एव उक्तः। अतः योगशब्दस्य नानात्र व्यवहारात् नानार्थत्वेन संशयः योगशब्दः वस्तुतः किमर्थकः? अत्रोच्यते योगशब्दः चित्तवृत्तिनिरोधार्थक एव। समाधिरिति व्युत्पत्त्यर्थः। न तावत् व्युत्पत्तिनिमित्तमेव पदस्य प्रवृत्तिनिमित्तं भवति। अन्यच्च व्युत्पत्तिनिमित्तम् अन्यच्च प्रवृत्तिनिमित्तम्। न हि गच्छतीति गौः भवति इति अन्यथा मनुष्यमात्रमपि गौः स्यात्। यश्च यमादिषु योगशब्दप्रयोगः स चापि उपचारेण बोध्य इति न क्वापि विप्रतिपत्तिः अप्रतिपत्तिश्च इति? अत्रोच्यते सत्यम् तथापि योगश्चित्तवृत्तिनिरोधः इति लक्षणं यथार्थम्।

प्रथमत उल्लेख्यं यदत्र योगशब्दो न हि संकीर्णार्थकः। ननु योगशब्देन कोऽर्थः परामृश्यत इति चेदुच्यते मनोवाक्कर्मभिः सममात्मन एकत्वं तथा चात्मानुकूलगमनं हि योगः। मानवानां भौतिकशक्तिर्यदा आध्यात्मिक्या शक्त्या सार्धं सम्मिलितो भवति, तदा अनन्तशक्तेः रहस्यद्वारमुन्मोचितं भवति। एतदेव मिलनं तावद्योगः। पुनश्च मानवाः प्राचुर्य-सम्पत्ति-प्रतिपत्यादिवैषयिकीं प्रतिष्ठां लब्धापि सततं मनसा अशान्ताः दुःखिनो भयाक्रान्ताश्च दृश्यन्ते। तस्मादेव शक्तिममुमनुसन्धातुं तेऽधुना न यतन्ते। ते परमशान्तेः पन्थानुसन्धाने निरन्तरं कृतप्रयत्नाः संदृश्यन्ते। स च शान्तिमार्गस्तावद्योगः। *ऋग्वेदस्यैकस्मिन्* मन्त्रे साधारणार्थे योगशब्दः प्रयुक्तः दृश्यते–

**यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन।**
**स धीनां योगमिन्वति।**[6]

अर्थात् यस्माद् देवादृते ज्ञानिनो जीवनयज्ञः सफलतां नाप्नोति, तैर्ज्ञानिभिः बुद्धिकर्मणोर्योगः करणीयः। यजुर्वेदस्यैकादशाध्यायस्य प्रथमे मन्त्रपञ्चके योगस्य प्रधानानि लक्षणानि प्रदर्शितानि। *पातञ्जलयोगसूत्रे* योगसाधनायै हठयोग-प्राणायामादिभेदा अङ्गीकृताः। जैनशास्त्रे तपोभावनायोगयोर्ध्यानसाधनायाश्चोपरि गुरुत्वं प्रदीयते। बौद्धग्रन्थेष्वपि योगभित्तिरूपेण ध्यानस्य सर्वातिशायि गुरुत्वमभ्युपगतम्। जैनागमशास्त्रोक्तः ध्यात्मयोगस्तावद्गीतायामध्यात्मविद्याभिधया अभिहितः।

व्याकरणशास्त्रानुसारं युज्धातोरुत्तरं घञा योगशब्दः सिद्धः। युज्धातोः द्विविधार्थकः प्रयोगः सिद्धः – 'युज् समाधौ' 'युजिर्योगे' चेति। अर्थात् समाध्यर्थकस्तावत् युज्धातुः संयोगार्थकोऽपि। समाधिर्नामात्मनो विक्षेपहीनायां समभावस्य परिणतिरूपायां समाहितावस्थायां चित्तस्य विशिष्टप्रकारकैकाग्रता। अर्थादेकाग्रता समाधिरिति। योगस्य सर्वाणि साधनानि निर्दिष्टानीति तात्पर्यं संयोगार्थकाद्योगशब्दाल्लभ्यते। संयोगार्थकोऽयं

योगशब्दः समाधिप्राप्तयेऽत्यावश्यकः। येन योगेनात्मा स्ववास्तविकं स्वरूपमुपलब्धुमलम्, स एव योगः। येन चात्मा स्वकपरमसाध्येन समं संयुक्तो भवति, स एव योगः। वैदिकसम्प्रदायस्य योगविषयके सर्वमान्ये पातञ्जलदर्शने योगस्य समाध्यर्थः परिगृहीतः - योगश्चित्तवृत्तिनिरोधः इति।

ननु चित्तवृत्तिनिरोधश्च यत् किञ्चिच्चित्तवृत्तिनिरोधो वा सकलचित्तवृत्तिनिरोधो वेति? अत्रोच्यते तदपि यथार्थं लक्षणं न वक्तुं योग्यम्। तथा हि राजसतामसचित्तवृत्तिनिरोधस्य योगलक्षणत्वे ध्यानधारणासमाधिषु योगाङ्गेषु स्वतो योगत्वाभावेषु अतिव्याप्तेरापत्तेः। तथा हि धारणाध्यानसमाधीनां त्रयाणाम् एकविषयत्वं शास्त्रे उक्तम्। तदुक्तं संयमसूत्रम्- **त्रयम् एकत्र संयमः** इति (3/4)। तद्व्याख्यायां च व्यासभाष्ये भाषितम्- "एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते तदस्य त्रयस्य तान्त्रिको परिभाषा संयमः" इति।

स च विषयः उपादेयभूतं चैतन्यमेव इति। तत्र च पुराणवचनमेव मानम्। तदुक्तम्—

**ध्यानं द्वादशपर्यन्तं मनो ब्रह्मणि योजयेत्।**
**तिष्ठेत्तल्लयतो युक्तः समाधिः सोभिधीयते।।** इति।

*योगश्चित्तवृत्तिनिरोधः* इति सूत्रस्यास्य तात्पर्यं खलु यस्मिन्नवस्थाविशेषे प्रमाणविपर्ययादिवृत्तीनां निरोधो भवति, सोऽवस्थाविशेषस्तावद्योग इति गीयते। उक्तलक्षणाच्चित्तविषयिणी सत्प्रवृत्तिः, एकाग्रता निरोधश्चेति विषयत्रयं प्रतिध्वनितम्। एकाग्रतायै यम-नियमादिरूपे सत्कार्ये प्रवृत्तिरावश्यिकी तथा च चित्तैकाग्रतातः प्राप्ते सम्प्रज्ञातसमाधौ केषाञ्चिद्वृत्तीनां निरोधोऽवश्यमेव भवति। साध्येच्छा साधनेच्छामुपसंक्रामतीति न्यायेन सम्प्रज्ञातः योगसाधनत्वेन इष्यते इति तस्य पारोक्ष्येण=उपचारेण योगत्वम् अस्ति। अनेनैव न्यायेन यमादीनामपि औपचारिकं योगत्वमस्तीति बोध्यम्। किन्तु सर्ववृत्तीनामेकान्ततया निरोधार्थमसम्प्रज्ञातसमाधिलाभहेतुको निरोधरूपः परिणामोऽत्यावश्यकः। मोक्ष एव योगः स्यात्, नान्यः। न चेदं केषामपि इष्टम्। किन्तु मोक्षसाधनेषु योगत्वं कुत्र वर्तते इति प्रश्ने स्वतःपुरुषार्थत्वात् असम्प्रज्ञात एव योग इति उत्तरम्।

*महाभारतस्य* भीष्मपर्वान्तर्गतायाः *श्रीमद्भगवद्गीतायाः* द्वितीयाध्यायस्य पञ्चाशत्संख्यके श्लोके योगविषयिणी अत्यन्तगुरुत्ववहा संज्ञा विहिता भगवता श्रीकृष्णेन स्वमुखनिःसृतवाण्याम् - **'योगः कर्मसु कौशलम्।'** अर्थात् कुशलतया सह कर्मैव योगः। किन्त्विदं कर्म करणीयं फलासक्तिवर्जनपुरःसरम्। अस्या एव *गीतायाः* द्वितीयाध्यायस्य सप्तचत्वारिंशत्तमे श्लोके भगवता योगप्रसङ्गेनोक्तम्—**'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन'**। अर्थात् कर्मण्येव तवाधिकारो न हि फले। एतादृशभावनापरका वह्व्यः उक्तयः प्राप्यन्ते भगवद्गीतायाम्। योगः कर्मसु कौशलम् इति व्याख्यानम् अन्यथैव भवितुमर्हति। द्वितीयाध्यायस्याष्टचत्वारिंशत्तमे श्लोके योगप्रसङ्गे भगवतोक्तम् - **'समत्वं योग उच्यते'** । अर्थात् समत्वमेव योगः। पुनश्च षष्ठाध्यायस्य त्रयोविंशतितमे श्लोके गीतम् - **'तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्'**। अर्थात् यस्यामवस्थायां दुःखसंयोगस्यैव वियोगो भवति, स एव योग इति ज्ञातव्यम्। वस्तुतः परिभाषाद्वयं प्रायेण सममेव। दुःखसंयोगात्मको वियोगस्तथा सिद्धिसिद्ध्योर्वा सुख-दुःखयोः समत्वं चेति विषयौ सममेव।

व्यवहारिके क्षेत्रे साधको लाभालाभयोरनुकूलप्रतिकूलयोर्वा यस्यां कस्यामपि परिस्थित्यां सममेव तिष्ठति। तस्य रागद्वेषौ न स्तौ। एतादृशसाधनरूपया समतया स जगत्संसारमूद्धमितः। साधनरूपया समतया स्वतःसिद्धभावेन समरूपेणैव भवति परमात्मप्राप्तिः – 'निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः'[7] इति गीतोक्तवचनात्। महर्षेः पतञ्जलेर्योगदर्शने योगस्य यः परिणामप्रसङ्गः प्रोक्तः गीतायां स एव योगः। *गीतायां* चित्तवृत्तितः सर्वतोभावेन सम्बन्धविच्छिन्नपूर्वकं स्वतःसिद्धभावेन समस्वरूपेण स्वाभाविकी स्थितिः खलु योगः। समतायां स्थितिलाभे सति तस्मात् कदापि पुनो विच्छेदः व्युत्थानं वा न भवति। तथाह्ययमेव नित्ययोगः इत्युच्यते। योगः कर्मसु कौशलम् इति सूत्रस्यापरः कश्चनार्थो वर्तते। स चार्थस्तावत् कर्मणि योगः एव कौशलम्। अर्थादत्रोक्तवाक्ये योगस्य संज्ञा न, कुशलताया प्रसङ्गः आलोचितः। कर्म-फलयोः प्राप्त्यप्राप्त्योः सिद्धासिद्ध्योर्वा समरूपस्थितिर्हि कर्मणः कौशलम्। *श्रीमद्भगवद्गीतायाः* प्रत्येकमध्यायस्यान्ते योगशब्दः उक्तः। तद्यथा प्रथमाध्यायः समाप्तिं गच्छतीत्थम् – ओँ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः समाप्तः। उक्तवाक्ये ब्रह्मविद्या, योगशास्त्रम्, श्रीकृष्णार्जुनसंवादश्चेति शब्देषु गीतायाः मुख्यालोच्याः ज्ञान-कर्म-भक्तियोगाः निबद्धाः। श्रीमद्भगवद्गीतायास्तृतीयाध्यायः खलु कर्मयोगनाम्ना, चतुर्थाध्यायो ज्ञानयोगनाम्ना तथा च, द्वादशाध्यायो भक्तियोगनाम्ना परिचीयते। यद्यपि गीतायाः सर्वत्रैवोक्तविषयोपादानानि परिलसितानि दृश्यन्ते।

*महाभारतस्य शान्तिपर्वणि* पितामहो भीष्मः युधिष्ठिराय ध्यानयोगं वर्णयामास। तन्मते, योगिनः शीतग्रीष्मादिकं सहित्वा नित्यं स्वत्त्वगुणेन स्थिताः सन्तः आसक्तिवर्जनपूर्वकं शौच-सन्तोष-नियमादिपालन-पुरःसरञ्च इन्द्रियादीनां निग्रहं कृत्वा स्त्रीसंसर्गवर्जनपूर्वकं तथा च, ध्यानविरोधिवस्तूनामभावयुक्तस्थले समाधिं कुर्वन्त्यैकान्तकर्तव्यतया। प्रतिदिनं मनसस्तथेन्द्रियानाञ्च ध्यानमार्गे स्थापनेन योगभ्यासे सति इन्द्रियैर्मनश्च स्वतः एव शान्तं तिष्ठति। इत्थं योगी सुखदुःखहीनतया मोक्षं लब्धुमलम्।

कर्मयोगस्तावन्निःस्वार्थकर्मणः पन्थाविशेषः। कर्मयोगे मुख्यतः प्रत्येकं क्रियैव कामनां विहाय ईश्वरस्य नैवेद्यरूपेण परिवेशिता भवति। कर्मस्वेव वर्तन्ते सर्वाणि शारीरिकाणि मानसिकानि च कर्माणि। कर्मयोगस्य साधकः सर्वदा अहमिकाभावं परित्यजति। तदा योगिनो हृदयादहंबोध-घृणा-हिंसादिकं विदूरीभवति। अपि च, प्रेमानन्द-समवेदनयोर्भावः प्रतिष्ठापितो भवति तद्हृदि। भगवद्गीतायास्तृतीयेऽध्याये अर्जुनः श्रीकृष्णं जिज्ञासते यत् युद्धो नोत्तमकर्मेति जानन्नपि कथं स महाभारतीययुद्धेन सह तं संयोक्तुं भूयो भूयोऽनुरुद्धवान्। तदा भगवच्छ्रीकृष्णः प्रोवाच – कर्म नामास्माकमुपलब्धिः प्रकृतात्मनः। कर्मणैवास्माभिर्जन्ममृत्युचक्रान्मुक्तिर्लभ्यते, यदा वयमैश्वरिकसन्तुष्टये निर्धारितं दायित्वं पालयामः। अन्यतः कर्मणः काङ्क्षितफलेन सह यदि कर्म संयुज्यते चेत्तत्कर्म अस्मान् वस्तुवादिना जगता समं संयुनक्ति।

*महाभारतस्य शान्तिपर्वणि* मनुबृहस्पतिसंवादे ज्ञान-कर्मयोगयोरस्ति प्रशंसा। वैदिककर्म साधारणतया सकामभावनोपेतम्। किन्तु यत्कामनारहितं तत्खलु परमात्मनः प्राप्तौ सहायकम्। नित्यकर्मानुष्ठानेन

वयमासक्तिरूपदोषान्मुक्तास्सन्तः शुद्धान्तःकरणाः भवामः। तदान्तरे ज्ञानालोकः समुद्भासते मानवकर्मणोऽगोचरेण च कामनातीतं परमं ब्रह्म लभ्यते।

ज्ञानयोगो नाम ज्ञानस्य पन्थाः। ज्ञानयोगस्तावदर्जितज्ञानानुशीलनप्रज्ञाभिज्ञताभिरात्मपोलब्धेरभिज्ञतार्जनस्य दार्शनिकः पन्थाः। ज्ञानयोगस्य दर्शनेन समम् अहम् ब्रह्मास्मीति महावाक्यस्य सादृश्यं भजते। स्वामी विवेकानन्दः कथयन्नस्ति – ईश्वरः जीवितप्राणिरूपेण पृथिव्या आत्मानं प्रकाशयति। ज्ञानयोगाय निश्चप्रचमेव कश्चन गुरुरपेक्षते, यस्य निर्देशेन ज्ञानयोगी ज्ञानमर्जयितुमलम्। ततः परम् अन्वेषकाद्गुरोः सकाशादर्जितज्ञानसाहाय्येन ब्रह्मणो ध्यानं लभ्यते। *भगवद्गीतायाश्च*तुर्थाध्याये वर्णितो ज्ञानयोगोऽतीन्द्रियज्ञानेन निर्मितः। भगवान् श्रीकृष्णः कथयति यद् आत्मनोऽतीन्द्रियज्ञानं तदैवार्जयितुं पार्यते, यदा सोऽन्वेषणकारी आसक्ति-भय-क्रोधेभ्यो मुक्तो भूत्वा परमात्मनि सम्पूर्णरूपेण लीनो भवति। एतदेव प्रकृतं ज्ञानम्।

*बृहदारण्यकोपनिषदश्च*चतुर्थाध्यायस्य पञ्चमे ब्राह्मणे सन्न्यासग्रहणात् पूर्वं याज्ञवल्क्यो यदा तत्पत्न्योर्गार्गीमैत्रेय्योर्मध्ये समस्तं वाह्यिकं सम्पदादिकं विभक्तुमियेष, तदा ब्रह्मवादिनी मैत्रेयी कथयति – **येनाहं नामृता स्याम् किमहं तेन कुर्याम्।** अर्थात् येन धनेन वयममृतं लव्धुं नालम्, तेन धनेन किम्। न हि पार्थिवं धनं, ब्रह्मतत्त्वस्यामृतत्त्वलाभस्य परमात्मनो वा लाभोपायान् विज्ञातुं याज्ञवल्क्येनोदितम् – **आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्याषितव्यः।** अर्थात्, दर्शनेन श्रवणेन मननेन निश्चितरूपेण ध्यानेन चात्मा परिलभ्यः। अर्थात्, आदावाचार्यस्य वाक्यान् नाम शास्त्रवाक्यादात्मतत्त्वं श्रोतव्यम्, ततःपरम् तर्कयुक्तीभ्यां तदात्मतत्त्वं विचारणीयम्। तदनु निश्चयरूपेण ध्यानं करणीयम्। इत्थं श्रवण-मनन-निदिध्यासनैरात्मतत्त्वं दर्शनीयम्। वस्तुतो *बृहदारण्यकोपनिषदि* वर्णितस्यास्य ब्रह्मतत्त्वस्य पन्थाः ज्ञानयोगस्यैव पन्थाः। मुमुक्षसाधको ज्ञानमार्गमनुसृत्यैव तल्लक्ष्यमवाप्तुमलम्।



श्रीकृष्णः पुनश्च गदति यत्, परं ज्ञानमायाति निःस्वार्थभक्तिपरकेण कर्मणा। सकृत् सत्यज्ञानस्याभिज्ञतायां लब्धायां सत्यान्वेषिणोऽन्तरे विद्यमानमज्ञानं विदूरितं भवति। भक्ति-प्रेम-समवेदना-त्यागादिसत्त्वगुणानाश्रित्य पूर्णभावेनैश्वरस्य सकाशे समर्पणीयमिति भक्तियोगः। वृद्ध-युव-धनि-रिक्त-अस्वस्थ-स्वस्थादिषु यः कोऽपीश्वरस्य भक्तो भवितुमर्हः। तदर्थं प्रयोजनं केवलमीश्वरं प्रत्यस्माकं आत्मसमर्पणम्। योगस्य पथचतुष्टयर्मध्ये भक्तियोगः सर्वातिशयः सहजलभ्यः पन्थाः। यदा कोऽपि गदति यत् भगवान् सर्वत्रैवास्ति, स सर्वत्र विराजते, तदा तत्प्रेम्णैव स परमात्मानं प्रति गच्छति। अयञ्चावेगोऽन्वेषणकारिहृदयमीश्वरेण सह युनक्ति। भक्तियोगस्तावत् हृदयात् घृणा-लालसा-हिंसा-अहंकारान् विदूरीकरोति। अर्जुनेन यदा श्रीकृष्णं प्रति परमेश्वरेण सह मिलनस्य सरलतमोपाय उक्तस्तदा तेन भक्तिमार्गो व्याख्यातः। श्रीकृष्णनये, यः स्वकसर्वाणि कर्माणि ईश्वराय निवेदयति समप्रयति वा तथा तस्य सर्वकर्मणां फलमीश्वरोपरि सुस्थिरम्, स मुमुक्षुः मोक्षं प्रत्येति।

वङ्गभाषायां शेखर-सेनेन रचितमेकं श्यामासङ्गीतम्—

**सकलि तोमारि इच्छा /इच्छामयी तारा तुमि/**
**तोमार कर्म तुमि करो मा /लोके बले करि आमि/**
**सकलि तोमारि इच्छा /पङ्के बद्ध कर करि/**
**पङ्गुरे लङ्घाओ गिरि /कारे दाओ मा ब्रह्मपद/**
**कारे करो अधगामी /कारे करो मा ब्रह्मपद/**
**कारे करो अधगामी /सकलि तोमारि इच्छा/**
**इच्छामयी तारा तुमि मा /तोमार कर्म तुमि करो मा/**
**लोके बले करि आमि /सकलि तोमारि इच्छा/**
**आमि यन्त्र, तुमि यन्त्री /आमि घर, तुमि घरनी/**
**आमि रथ, तुमि रथी /येमन चालाओ तेमनि चलि।"**

उक्ते सङ्गीते भक्तियोगस्य मर्मार्थः स्पष्टतयोपलभ्यते।

वयं जानीमो यद्भक्तियोगस्यान्यतमा साधिका कृष्णान्तःप्राणा तावन्मीरावाई इति। साम्प्रतमध्यात्मजगति सा सर्वेषां परमाराध्या। भगवन्तं श्रीकृष्णं विश्वब्रह्माण्डस्य परमपुरुषरूपेण मत्वा सा तं परमात्मानं प्रति पूर्णरूपेणात्मानं समर्पयन्त्यासीत्। अस्याः साधिकाया अगणितेषु सङ्गीतेषु प्रतिध्वन्यते केवलं कृष्णप्रेम। तस्याः प्राणैः सह सम्पृक्तं केवलं कृष्णप्रेम। अपरतो, भक्तिमार्गस्य सर्वापेक्षया श्रेष्ठप्रचारकस्तावच्छ्रीचैतन्यमहाप्रभुर्नव-द्वीपवास्तव्यः। तस्य कृत्स्नं जीवनं परिव्याप्यासीत् केवला भगवद्भक्तिः कृष्णसेवा वेति।

भगवतो दिव्यगुणान् निशम्य द्रवीभूता चित्तवृत्तिस्तं सर्वेश्वरं प्रभुं प्रति यदा धाराप्रवाहरूपेण सर्वदा प्रवहन्ती भवति, तदा तद्भक्तिरूपतां लभते। तथा हि *ऋग्वेदे* आम्नातम् –

**अग्निं विश्वा अभि पृक्षः सचन्ते।**
**समुद्रं न स्रवतः सप्त यह्वीः।।**[8]

अर्थात् यथा गङ्गादिसप्तबृहतो नद्यः समुद्रं प्राप्य तत्र विलीना भवन्ति, तथैव भक्तानां मनसः सर्वा वृत्तिः परमेश्वरं प्रति गच्छति तस्मिन्नेव च विलीयते। अस्य भक्तितत्त्वस्य निदर्शनं वेदस्य बहुत्रैव प्रकीर्णशीर्णतयोपलभ्यते।

उपसंहृतावभिधातुमलं यद्भारतवर्षस्य चिराय आदर्श-संस्कृति-महिम-जीवनबोधाः प्रतिभासन्ते भारतीयसाहित्येषु। सुमहद्वैदिकसाहित्यप्रपञ्चं वा भवतु, रामायणं महाभारतं वेति ऋषयस्तेषाञ्चेतनया स्वानुभूतभावान् प्रतिभया अमरत्वं प्रददुः। महाभारतप्रणेतृवेदव्यासस्तत्कृतावैतादृशं किमपि तत्त्वालोचनं न चकार, भाविप्रजन्म तात्त्विक-रसास्वादनाद् वञ्चितं भवेदिति। तस्मादेवाभाणकोऽस्ति – यन्नेहास्ति, तन्नास्ति भारते। महाभारतस्य तात्त्विकालोचनासु धर्मः, राजनीतिः, आदर्शजीवनबोधः, मूल्यबोधः, सामाजिकं तत्त्वञ्चेति किं न विधृतमस्ति। वस्तुतः, धर्मार्थकाममोक्षाणामेकत्र समावेशः प्रायो दुर्लभो *महाभारतं* विशेषेण गीतामृते।

मुक्तितत्त्वं भारतीयजीवनधाराया भारतीयदर्शनस्य चाङ्गस्वरूपम्। अत्र मानवा बहुदेवतानामुपासनायां सचेतनतयावचेतनमनसा च परमात्मानं कामयन्ते। परमात्मप्राप्तौ वयं सर्वदा निमग्नाः स्यामः। भारतीयदर्शने मोक्षलाभस्य बहवः सदुपायास्तात्त्विकरूपेणोपवर्णिताः। *ऋग्वेदे* उपनिषत्साहित्ये इतरभारतीयदर्शने च ऋषयः (क्रान्तदर्शिनः) शाश्वतोपलब्धिं क्वचित् प्रत्यक्षतया क्वचिच्च सुगभीरया व्यञ्जनया प्रकाशितवन्तः। महर्षिणा व्यासदेवेन तदुपलब्धिं सरलया भाषया भावराजिभिश्च साधारणमनुजानां बोधसौकर्याय प्रकटीकृत्य महाभारताख्यमार्षकाव्यं व्यरचि। विशेषतया महाभारतस्य भीष्मपर्वान्तर्गतायां गीतायामेव सोपलब्धिर्विधृता। ब्रह्मणः परमात्मनो वा प्राप्त्युपायाः कर्म-ज्ञान-भक्ति-योगैरूपस्थाप्यन्तेऽत्र। गीतोक्तेन ध्यानयोगेन समं पतञ्जलेर्योगदर्शनस्य तात्त्विकालोचनायाः बहुलांशेन साम्यं वर्तते। व्यासदेवेन भगवन्तं श्रीकृष्णं विश्वब्रह्माण्डस्य मूलकारणत्वेन वर्णयता तस्य प्राप्त्युपायः स्वयंभगवतो मुखनिःसृतवाणीषूक्तः। महाभारतस्यान्येषु पर्वसु परमात्मलाभोपायाः सन्निविष्टा अपि ते तु सुदुर्लभाः इतरभारतीयसाहित्यप्रपञ्चे। योगोपायो योगप्राप्त्युपायो वा भिन्नोऽपि मूलं तत्त्वन्त्वेकमेव। पारिशेष्येण रवीन्द्रनाथठक्कुरस्य वङ्गोक्तेः संस्कृतप्रतिरूपमत्रोल्लिख्य वारमाम्यहम्–ज्ञानकर्मभक्तीनां समन्वयात्मको योगो हि कृत्स्नस्य भारतवर्षस्येतिहासस्य चरमं तत्त्वम्। निःसन्दिग्धतया पृथिव्याः सर्वा जातय एव स्वेतिहासस्यान्तं गत्वा कस्या अपि समस्यायाः मीमांसां तत्त्वञ्च निर्णीतवत्यः। अपि च, देशीयेतिहासमाध्यमेन मनुष्यचित्तगतञ्चरमं सत्यं सन्दधति स्म प्राप्नुवन्ति स्म चैता जायतः। परं स्वसन्धानमिदं सत्यञ्च जातिप्रपञ्चं स्पष्टतया न वेत्ति। नैके मन्यन्ते यत्तस्य पन्थानः इतिहासः केवलः इतिहासः, तत्र मूलाभिप्रायस्तथा चरमं गम्यस्थलञ्चत्युक्ते किमपि नास्ति। किन्तु भारतवर्षमेकदा अस्मत्कृत्स्नेतिहासस्य चरममेकं तत्त्वं विश्वं निकषा उद्घोषयति स्म। मानवेतिहासस्य ज्ञान-भक्ति-कर्माणि नैकेषु स्थलेषु स्वतन्त्रतया मिथः विरुद्धरूपेण स्वपथेन गच्छन्ति। विरोधस्यास्य विप्लवो भारतवर्षे सम्यक्तया

घटित इति कृत्वैवैकस्मिन् स्थले स समन्वयः स्पष्टतया द्रष्टुमलम्। मानवीयाः सर्वे प्रयत्नाः कुत्रागत्याविरोधेन सन्मिलितुमर्हन्तीति महाभारतं तस्य परमलक्ष्यस्यालोकवर्तिकां प्रतिचतुष्पथं प्रकटीचकार। सालोकवर्तिका खलु श्रीमद्भगवद्गीतेति शम्।

## परिशीलिता ग्रन्थानुक्रमणी

*उपनिषद् ग्रन्थावली* – स्वामी गम्भीरानन्द (सम्पा.), उद्बोधन कार्यालय, कोलकाता।

*ऋग्वेदसंहिता* (द्वितीय खण्ड) – विजनविहारी गोस्वामी (सम्पा.), हरफ प्रकाशनी, कोलकाता, 2000 (चतुर्थसंस्करणम्)।

*पातञ्जलयोगदर्शनम्*—तत्त्ववैशारदीयोगवार्तिकटीकाद्वयोपेतं व्यासभाष्यम्, सम्पादिका विमला कर्णाटक, काशीहिन्दुविश्वविद्यालय एवं रत्नापाब्लिकेशन, वाराणसी, 1992।

*योगदर्शनम् षट्टीकोपेतम्* — चौखम्बा संस्कृत सीरिज आंफिस, बनारस, 1951।

*वेदान्तदर्शनम्* — (प्रथमः अध्यायः) स्वामी विश्वरूपानन्दः (अनुवादकः व्याख्याता च), स्वामी चिद्घनानन्द पुरी, वेदान्तवागीशः श्री-आनन्द-झा-न्यायाचार्यश्च (संशोधकसम्पादकौ), उद्बोधनकार्यालय, कलकाता, 1996 (तृतीयसंस्करणम्)।

*बृहदारण्योकनिषत्* — झर्णा भट्टाचार्य (सम्पा.), संस्कृत पुस्तक भाण्डार, कलकाता, 2006।

*श्रीमद्भगवद्गीता* — स्वामी रामसुखदास (सम्पा.), गीता प्रेस्, गोरखपुर।

*An Introduction of Indian Philosophy* - Chandra Satish Chatterjee & Dhirendranamohon Datta, Culcutta: University of Calcutta, 1984.(Rep.).

## तथ्यसूत्राणि

1. *ऋग्वेदः*, 1/164/46
2. *तत्रैव*, 10/114
3. *निरुक्तम्* (7.4)
4. *ईशोपनिषत्* (5)
5. *तैत्तिरीयोपनिषद्*, भृगुवल्ली, षष्ठोऽनुवाकः
6. *ऋग्वेदः*, 1/18/9
7. *श्रीमद्भगवद्गीता* (5/19)
8. *ऋग्वेदः*, 1/71/7

प्रभाषकः, संस्कृतविभागः.,
वुनियादपुर-महाविद्यालयः,
दक्षिण-दिनाजपुरम्, 733121,
पश्चिमवङ्गः।
चलवाणी-9775840064
Email-santigopaldas901@gmail.com